सचित व आगामी सभी कार्यों को नष्ट कर देती है। उसी तरह विरहाग्नि प्रेममे से रजस्तम सपर्कजनित सकलकामनाओं व दूषितवासनाओं को नष्टकर उस प्रेमको सात्त्विक बनादेती है। श्रीमद्भागवत मे भी 'दु सहप्रेष्ठविरहतीव्रतापधुताशुभा। तथा 'तदप्राप्तिमहादु खविलीनाशेषपातका' इत्यादि वचनों से विरह द्वारा सकल अशुभों की निवृत्ति बतलाई है।

भगवान् कृष्णने भी अपने वियोगदु खद्वारा गोपियों के प्रेमसे इस काममयी व सौन्दर्यमयी वासना को दग्धकर उनके प्रेमको दिव्य व सात्त्विक बनाया था। कविवर कालिदासने भी यही कार्य किया है।

पहले जैसे वर्षा ऋतुमे वहनेवाली नदीके जलप्रवाह मे तीव्रता मर्यादोल्लघिता व आविलता रहती है, उसी प्रकार दुष्यन्त व शकुन्तला के प्रेममे भी कामकी तीव्रता, वासनाओं की आविलता तथा गुरुजनोपेक्षारूपी मर्यादोल्लाघिता थी। किन्तु वर्षाके बीतजाने पर जैसे नदीप्रवाहमे मन्दता, गम्भीरता, स्वच्छता, प्रसन्नता, व रमणीयता आजाती है, और तदन्तर्वर्ती प्रत्येक वस्तुकी स्पष्ट अभिव्यक्ति होजाती है, उसी प्रकार दुष्यन्त व शकुन्तला के प्रेममे भी वियोगानन्तर पुनर्मिलन के बाद शान्तता, गम्भीरता, आदर्शता आजाती है। और वे दोनों ही भारतीयसस्कृतिकी मर्यादा, तथा गुरुजनों के आदेश का पालन करते हैं। उस समय उनके अन्त करणमें अपने पूर्वकालमे कृत अपराध व अन्य कर्तव्यों की स्पष्ट प्रतीति होजाती है। इस समय पहले की तरह शकुन्तला प्रत्याख्यान को पतिका दोष कहकर भारतीय नारीसस्कृतिकी मर्यादा को भग नहीं करती है। अपितु भारतीय नारीकी तरह पति के दोषको भी अपना ही पूर्वजन्मकृत दुष्कृत मानती है। जैसाकि निम्नाङ्कित उक्ति से स्पष्ट है —

नून मे सुचरितप्रतिबन्धक पुराकृत तेषु दिवसेषु परिणाममुखमासीद् येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरस सवृत्त इति ॥

कालिदासने केवल शकुन्तला नाटक मे ही नहीं, अपितु अपने प्रसिद्ध महाकाव्य रघुवश में भी भारतीय नारीके इस आदर्श को उपस्थित किया है। वहा पर राम के द्वारा अपने निष्कारण परित्याग द्वारा दु खावेश मे सीताके द्वारा रामके प्रति उपालम्भपूर्ण शब्दों का कथन कवि करवाता है, जैसे—

वाच्यस्त्वया मद्वचनात् स राजा वह्नौ विशुद्धामपि यत्समक्षम्।
मा लोकवादश्रवणादहासी श्रुतस्य किं तत्सदृश कुलस्य।

किन्तु इसके बादही वह भारतीय नारीके उस दिव्य आदर्श का उपस्थान करता है जो भारतीय संस्कृति व भारतदेश को छोड़कर अन्यत्र कहीं उपलब्ध नहीं होता। सीता राम से कहती है :—

कल्याणबुद्धेरथवा तवायं न कामचारो मयि शङ्कनीयः ।
ममैव जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः ॥

अर्थात् आप ( राम ) सीता मेरे प्रति सदा हितबुद्धि रखने वाले हैं अतः आपने मेरा परित्याग स्वेच्छा से नहीं किया है। किन्तु इस समय निरपराध होने पर भी जो मेरा परित्याग आपने किया है उसमें आप कारण नहीं है किन्तु मेरे ही जन्मान्तर के पाप का यह परिणाम है।

अस्तु प्रसङ्गागत इस बातको यहीं समाप्त कर हम प्रकृत की तरफ आते हैं।

वस्तुतः प्रेम एक अत्यन्त पवित्र-विशुद्ध तथा व्यापक वस्तु है। भाव, भक्ति, श्रद्धा, वात्सल्य रति आदि सब इसीके स्वरूप हैं। केवल सम्बन्धभेदसे व प्रतियोगी तथा अनुयोगी के भेदसे यह नाना रूपों को धारण कर लेता है। निरतिशयानन्द भी इसीका स्वरूप है। अतः इसकी व्यापकता में किसी प्रकार का सन्देह नहीं। किन्तु आवश्यकता केवल इसकी विशुद्धता व व्यापकता की है। कालिदास की मेघदूत आदि अन्य कृतियों में भी प्रेम की यही पद्धति दृष्टिगोचर होती है। हमने केवल उसकी दो कृतियों के उदाहरण द्वारा इस तथ्य का दिग्दर्शन कराने का प्रयत्न किया। इसके औचित्यानौचित्यका निर्णय पाठक करेंगे।

# योगविभूतिशब्दार्थविवेचनम्

( ले० सुरजनदासः स्वामी )

इहाद्य खलु वर्तते समीक्षाविषय. 'एता विभूति योग च मम यो वेत्ति तत्त्वत' इति गीताशास्त्रे योगविभूतिशब्दार्थ प्रधानत । पर तत्प्रसङ्गात् गीताया तत्तत्स्थलेषु प्रयुज्यमान सार्वत्रिक योगशब्दोऽपि समीक्षाकोटिमारोहति ।

इह तावद्विचारणीयम् यद्यपि युजिर् योगे युज् समाधी इत्यादिधातुभिर्घञ्प्रत्ययेन निष्पन्नो योगशब्द ध्यानोपायसंगत्याद्यनेकार्थक, प्रतिपादितश्च कोशकृताऽपि 'योग सहननोपायध्यानसगतियुक्तिषु' इत्युक्तयताऽनेकार्थता तस्य, तथापि गीताया—

योगस्थ कुरु कर्माणि सग त्यक्त्वा धनजय ॥

तस्माद् योगाय युज्यस्व, योग कर्मसु कौशलम् ॥

इम विवस्वते योग प्रोक्तवानहमव्ययम् ॥

योगी यु जीत सततमात्मान रहसि स्थित ॥

एता विभूतिं योगं च मम यो वेत्ति तत्त्वत' ॥

इत्यादिषु वहुषु स्थलेषु प्रयुक्तो योगशब्द सर्वत्र समानार्थक उत विभिन्नार्थक । विभिन्नार्थकश्चेत् कुत्र कुत्र कोऽर्थो ग्राह्यो योगशब्देनेति ।

एतस्या तु मीमासायामिदमेव प्रतिभाति यत् गीताया बहुत्र प्रयुज्यमानो योग-शब्द विभिन्नार्थक एव न समानार्थक । सर्वत्र समानार्थकतामादाय गीतावाक्याना अर्थस्य सामजस्यानुपपत्ते ।

तथाहि 'योगस्थ कुरु कर्माणि सङ्ग त्यक्त्वा धनजय' इत्यत्र योगशब्दार्थ "सिद्ध्यसिद्धी च समत्वबुद्धि" । स्पष्टीकृतश्चैषोऽर्थो भगवता स्वयमेव अस्य श्लोक-स्यान्ते 'समत्व योग उच्यते' इत्यनेन वाक्येन । व्याख्यातश्चैवमेव भगवता शङ्करपादेनापि ।

इम विवस्वते योग प्रोक्तवानहमव्ययम् ( चतुर्थ अ० )

एषा तेऽभिहिता सांख्ये बुद्धियोगे त्विमा शृणु ( द्वितीय अ० )

सन्यास कर्मणा कृष्ण पुनर्योग च शससि ( पञ्चम अ० )

इत्यादिषु योगशब्देन स कर्मयोगोऽभिप्रेत यत्र फलासक्तिकामनापरित्याग-पूर्वक कर्मणा कर्तव्यत्वमुपदिश्यते एतादृशे कर्मयोगे कर्मणि बुद्धे समुच्चयो वर्तते । कर्मसु बुद्धियोगेनैव फलाना आसक्ते कामनाना च परित्यागो विधीयते कर्मकर्त्रा ।

एष एव च कर्मयोगो कर्मणि बुद्धेर्योगात् बुद्धियोगशब्देनापि व्यपदिश्यते। प्रयुक्तश्च एतदर्थं भगवता बहुत्र बुद्धियोगशब्दः, यथा 'बुद्धियोगाद् धनंजय' ददामि बुद्धियोगं तं येन मामुपयान्ति ते बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव' इत्यादिषु।

एतादृशस्यैव कर्मयोगस्य अर्जुनायोपदेशं विदधता भगवता तस्य परपदप्रापकत्वमपि प्रतिपादितम् 'असक्तः कुरु कर्माणि, संगं त्यक्त्वा धनंजय।

असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः' इति पद्ये न।

अस्यैव च योगस्य कर्मसंन्यासापेक्षया वैशिष्ट्यं, अपि च ज्ञानाद्यपेक्षयाऽपि ज्यायस्त्वं प्रतिपादितं भगवता निम्नाङ्कितवचनाभ्याम्।

संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ।
तयोस्तु कर्मसंन्यासात् कर्मयोगो विशिष्यते॥
तपस्विभ्योऽधिको योगी, ज्ञानिभ्योऽपि मतोऽधिकः।
कर्मिभ्यश्चाधिको योगी, तस्माद्योगी भवार्जुन॥ इति

एष च बुद्धियोगापरपर्यायः कर्मयोगो केवलकर्मयोगाद् भिन्नः, अत एवास्य कर्मिणोऽप्येपक्षया आधिक्य प्रतिपादितमुपर्युक्ते वचने। गीतायामाद्ये अध्यायषट्के अयमेव बुद्धियोगापरपर्यायः कर्मयोगः प्रधानतया उपदिष्टो भगवता अर्जुनायेति ध्येयम्।

परं गीतायाः षष्ठेऽध्याये "योगी युंजीत सततमात्मानं रहसि स्थितः" इत्यादिभिर्वचनैर्यस्य योगस्य प्रतिपादनं विहितं स योगो न बुद्धियोगापरपर्यायः कर्मयोगः अपि तु तत्साधनोपायः चित्तनिरोधापरपर्यायो योगः वर्तते यस्य प्रतिपादनं भगवता अस्मिन्नध्याये 'योगी युंजीत सततमित्यत आरभ्य 'युक्तस्वप्नावबोधस्य योगो भवति दुःखहा' इत्यन्तेन 'संकल्पप्रभवान् कामान्' इत्यारभ्य 'युंजन्नेवं सदात्मानं योगी विगतकल्मषः' इत्यन्तेन च सन्दर्भेण विहितम्।

एतावत्पर्यन्तं निरूपितः गीतायां तत्तत्स्थलेषु योगशब्दस्यार्थः। साम्प्रतं गीतायां दशमेऽध्याये 'एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः' इति पद्ये प्रयुक्तस्य योगशब्दस्य कोऽर्थः इति तावद्विचार्यते। यद्यपि युजिर् योगे इति धातुना निष्पन्नस्य योगशब्दस्य सम्बन्ध एवार्थः प्रतिभाति संगच्छते चापि एषोऽर्थः। अतः नास्त्यस्य जिज्ञास्यत्वम् इत्यापाततः प्रतिभाति। तथापि सूक्ष्मेक्षिकयाऽऽलोच्यमाने कोऽसौ सम्बन्धविशेषो भगवतः सर्वप्राणिषु वर्तते यस्यात्र योगशब्देन निरूपणं विहितं, इत्येवंरूपेण सम्बन्धविशेषमादाय भवति प्रेक्षावतां समीक्ष्यविषयोऽयं योगशब्दः। एव विभूति-

शब्दोऽपि व्युपसर्गकात् भूधातो क्तिनि निष्पन्न विविधाभवनरूपे ऐश्वर्यादिरूपेऽर्थे च वर्तते, तथापि सोऽर्थो नात्र सामञ्जस्यमर्हति इति सोऽपि समापतति जिज्ञासाविषयताम्, इति तयो शब्दयोरर्थविचार इदानीं प्रस्तूयते ।

द्विविधो हि खलु दहरोत्तरयोर्भावयो संसर्गो भवति, योगो विभूतिश्च । उत्तरस्माद् भावात्प्रवृत्तांशस्य यो दहरेऽनुग्रह स योग । अप्रवृत्तस्य च उत्तरस्य (उत्कृष्टस्य, महत ) यो दहरेऽनुग्रह स विभूति । अन्त सम्बन्धो योग , बहि सम्बन्धो विभूति । स्वरूपधर्मो योग , आश्रितधर्मो विभूति । यथा तुषारस्यागलितस्य जले प्रवेशो विभूति । गलितस्य च तुषारस्य जले सम्बन्धो योग । जलस्य द्रवीकरणे योऽग्ने सम्बन्ध जले स योग । यतोऽत्र अग्नि स्वरूपाद् प्रवृज्य जलस्य स्वरूप धत्ते । द्रुते जले च यस्तापजनक अग्ने सयोग स विभूति । यतोऽत्र उष्मतापादक अग्निर्न जलस्य स्वरूपतामायाति अपि तु स्वविभूत्या जलमनुगृह्णाति अर्थात् जले अग्निराश्रितो भवति ।

एवमेव तण्डुलस्योदनभावनिर्माणे य अपा सम्बन्ध स योग । तत्र हि जल जलस्वरूपात्प्रवृज्य तण्डुले प्रविष्ट ओदनस्वरूपता धत्ते । तस्य च ओदने, आर्द्रे तण्डुले च योऽपा सम्बन्ध स विभूति । न हि तत्र जलस्य आन्तर स्वरूपनिर्मापक सम्बन्ध अपितु बाह्यक आगन्तुक । जलमत्र तण्डुलस्याश्रितो धर्मो भवति न तु स्वरूपधर्म ।

एवमेव अव्ययस्य ब्रह्मणोऽपि सर्वेषु भावेषु द्विविध सम्बन्धो भवति । योगो विभूतिश्च । अव्ययस्य यो भावोऽव्ययात् प्रवृत्तो भूत्वा दहरवस्तुषु संयुज्य तद्वस्तुस्वरूपनिर्मापको भवति स आन्तर वस्तुस्वरूपनिर्मापक सम्बन्ध. योगशब्दवाच्य । यत्र अव्ययस्य सम्बन्ध न दहरवस्तुन स्वरूपधर्मो भवति अपि तु स्वविभूत्या वस्तूनि व्याप्नोति वस्तुषु च आश्रिततया स्थितो भवति । एतादृश बहि. सम्बन्धो विभूतिशब्दव्यपदेश्यता भजते ।

भगवता स्वय गीताया स्वस्य ( अव्ययस्य ) दहरेषु लौकिकवस्तुषु द्विविधस्य सम्बन्धस्य स्पष्ट निरूपण विहित प्रत्तानि चानेकानि उदाहरणानि । तेषु पूर्वं भगवतो योगसम्बन्धस्योदाहरणानि प्रस्तूयन्ते । यथा—

बुद्धिर्ज्ञानमसम्मोह क्षमा सत्य दम शम , सुख दु ख भवो भावो भय चाभयमेव च ।
अहिंसा समता तुष्टिस्तपो दान यशोऽयश भवन्ति भावा भूताना मत्त एव पृथग्विधा ॥

बुद्ध्यादयो हि मानसा भावा अव्ययात्प्रवृज्य भूतेषु प्रविष्टा भूताना स्वरूपधर्मा

भवन्ति इत्येते भावाः अव्ययस्य भगवतो योगसम्बन्धस्योदाहरणतां भजन्ते ।

अत एव एतेषां समुपन्यासानन्तरं भगवता योगसम्बन्धस्य स्फुटीकरणाय 'भवन्ति भावा भूतानां मत्त एव पृथग्विधाः' इत्युक्त्या तेषां भावानां स्वस्मादव्ययात्मनः प्रवर्गोऽभिहितः, एतदर्थमेव च मत्त इत्यत्र विभागद्योतिका पञ्चमीविभक्तिरुपात्ता, उत्पत्त्यर्थकस्य च वतेः प्रयोगो विहितः । अग्रे च—

महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ।

मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥१०।६।

इत्यस्मिन् पद्ये वशिष्ठागस्त्यादिषु सप्तसु महर्षिसु स्वेदजाण्डजोद्भिज्जजरायुज-भेदभिन्नेषु स्वायंभुवरौचिषरैवतोत्तमभेदभिन्नेषु वा चतुर्विधेषु मनुषु वा स्वस्य योगः एव प्रोक्तः । एते हि आधिदैविका भावा अव्ययात्मनः प्रवृज्य (पृथग्भूत्वा) सकलां सृष्टिं सृजन्ति। सृज्यमानां वस्तूनानां स्वरूपधर्माश्च भवन्ति। एतेषु हि आधिदैविकेषु भावेषु अव्ययस्य योगसम्बन्ध इत्येतदर्थस्य स्फुटतायै 'जाताः' इत्यस्य प्रयोगो विहितः । अव्ययात्मनः प्रवृक्तेभ्य आधिदैविकेभ्य एभ्यो भावेभ्य एव सकलजगदुत्पत्तिः संजायते । अतएव भगवता मनुना—

ऋषिभ्यः पितरो जाताः पितृभ्यो देवदानवाः ।

देवेभ्यश्च जगत्सर्वं चरं स्थाण्वनुपूर्वशः ॥ इत्युक्तम्

एवमेव—रसोऽहमप्सु कौन्तेय, प्रभास्मि शशिसूर्ययोः ।

प्रणवः सर्ववेदेषु, शब्दः खे पौरुषं नृषु ॥

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।

जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥

वीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ॥

बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥

वलं वलवतामस्मि कामरागविवर्जितम् ॥

धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥७।८।११

इत्यत्र अप्सु रसरूपेण, शशिसूर्ययोः प्रभारूपेण ,वेदादिषु च प्रणवादिरूपेण अव्ययस्य योग एव । अवादिषु विद्यमानस्य रसादेः अवादीनां स्वरूपधर्मत्वात् । निरूपितन्तावदेवं योगसम्वन्धस्वरूपं समासतः सोदाहरणम् । विभूतिसम्वन्धस्ताव-त्साम्प्रतं निरूपणीयः—

विभूतिर्हि वहिर्याम सम्बन्ध, व्याप्तिरूप सम्बन्ध । यथा रक्तवस्त्रे रक्तत्वस्य सम्बन्ध सुधाचूर्णोपरञ्जितभित्तौ च श्वैत्यस्य सम्बन्ध विभूति । यथा वा वायौ गन्धस्य, धात्रीमुखच्छाया मधुन, जलदर्पणनेत्रादौ च प्रतिबिम्बस्य सम्बन्धो विभूति । एवमेव अव्ययात्मनो भगवतोऽपि सासारिकेषु आध्यात्मिकेषु आधिदैविकेषु च भावेषु विभूतिरूपो वहिर्यामसम्बन्धोऽपि वर्तते येन विभूतिसम्बन्धेन स सासारिकान् भावान् व्याप्नोति । स चाव्ययात्मा भगवान् क्वचित् साक्षादपि सासारिकान् भावान् व्याप्नोति क्वचिच्च स्वाशबहुलपदार्थद्वाराऽपि । यत्र साक्षात् व्याप्नोति तत्र स्वयमव्यय एव विभूति । यथा

'अहमात्मा गुडाकेश सर्वभूताशयस्थित,<br>
अहमादिश्च मध्य च भूतानामन्त एव च' ।

'अत्र सकलप्राणिनामन्त करणे वर्तमान प्रत्यगात्मा भूतानामादिमध्यान्तव्यापी च अव्यय एव विभूति । यत्र च स स्वाशबहुलप्रधानभावद्वारा भावान्तराणि व्याप्नोति तत्र अधिष्ठानाभिव्यापी प्रधानोऽधिष्ठाता विभूति । यथा 'आदित्यानामह विष्णुर्ज्योतिषा रविरशुमान्' इत्यादिषु आदित्याद्यधिष्ठानेस्वभिव्याप्तिशीलेन प्रधानेन विष्ण्वादिरूपेण अधिष्ठात्रा स आदित्यादीन् व्याप्नोति इति स प्रधानोऽधिष्ठाता विष्ण्वादिरेव विभूति ।

परमुभयत्रापि आश्रिताश्रययोर्भावयो सम्बन्धो वहिर्यामरूपेण आश्रितधर्मरूपेणैव वर्तते न स्वरूपधर्मेण । यथा 'अहमात्मा गुडाकेश सर्वभूताशयस्थित' इत्यत्र सर्वभूताशयस्थितोऽपि अव्ययात्मा सर्वभूताशयेषु आश्रितधर्मरूपेणैव वर्तते न तु स्वरूपधर्मेण । यथा च आदित्येषु विष्णुरूपेण भगवान् वर्तते, पर द्वादशविधेषु आदित्येषु वर्तमानो विष्णुराश्रितधर्म एव न स्वरूपधर्म । न हि विष्णु आदित्याना स्वरूप धत्ते, अपित्वादित्यादिषु आश्रयेषु स आश्रित-धर्म-विभूति रूपेण वर्तते ।

यथा वा 'इन्द्रियाणा मनश्चास्मि भूतानामस्मि चेतना'। इत्यत्र इन्द्रियेषु मनस पृथिव्यादिषु च पञ्चसु भूतेषु चेतनाया सम्बन्धो विभूतिरेव । तत्र इन्द्रियेषु भूतेषु च मनसश्चेतनायाश्च व्याप्त्यात्मकेन आश्रितधर्मरूपेणैव वर्तमानत्वात्, नतु मन इन्द्रियाणा, चेतना भूताना वा कदापि स्वरूपधर्मो भवति, मनो विनापि इन्द्रियाणा, चेतनामन्तराऽपि च भूताना स्थितिदर्शनात् । स्वरूपधर्मत्वे तु स्वरूपधर्मस्योच्छेदेन वस्तुन एवोच्छेदप्रसङ्गात् । तस्मात् 'अहमात्मा गुडाकेश सर्वभूताशयस्थित' इत्यत आरभ्य

'यच्चापि सर्वभूतानां वीजं तदहमर्जुन' इत्यन्तं विभूतीनामुदाहरणानि वर्तन्ते। एषु सर्वेषु उदाहरणेषु साक्षात् परम्परया वा भगवतो विभूतिसम्बन्ध एव वर्तते।

इदं त्ववधेयमत्र यत् विभूतिसम्बन्धमादाय भगवान् भूतेषु येन येन रूपेण वर्तते तान्येव रूपाण्यत्र विभूतिशब्देनोक्तानि न विभूतिसम्बन्धमात्रम्, अत्रत्यप्रश्न-प्रतिवचनयोरवलोकनेन तथैव प्रतीतेः।

तथाहि भगवतः साक्षाद् रूपस्य सर्वथाऽव्यक्तत्वेन उपासितुमशक्यत्वात् अर्जुनेन भगवतो दिव्या विभूतय उपासनार्थं पृष्टाः।

नहि ते भगवान् व्यक्ति विदुर्देवा न दानवाः ॥
स्वयमेवात्मनात्मानं वेत्थ त्वं पुरुषोत्तम ॥
भूतभावन भूतेश देवदेव जगत्पते ॥
वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ॥
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥
कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ॥
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥
विस्तरेणात्मनो योगं विभूतिं च जनार्दन ॥
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥

इत्यनेन पद्यजातेन तासां विभूतीनां स्वरूपं पृष्टं याभिर्भगवान् लौकिकान् भावान् व्याप्य तिष्ठति। भगवताऽपि

हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥

इत्यनेन पद्येन प्रधानविभूतीनां कथनं प्रतिज्ञाय 'अहमात्मा गुडाकेश' इत्यादिना तेषां भावानामेव वर्णनं विहितम् यैर्भावैः स भौतिकान् पदार्थान् व्याप्नोति।

तादृश एव विभूतिविषयकः परिप्रश्नः श्रीमद्भागवते एकादशस्कन्धे उद्धवेन अनेनैव रूपेण भगवन्तं प्रति पृष्टः उपासनायैव। तथाहि—

येषु येषु च भावेषु भक्त्या तु परमर्षया। उपासीनाः प्रपद्यन्ते संसिद्धिं तद् वदस्व मे ॥
याः काश्च भूमौ दिवि वै रसायां विभूतयो दिक्षु महाविभूतेः ॥

ता मह्यमाख्याह्यनुभावितास्ते नमामि तं तीर्थपदाङ्घ्रिपद्मम् ॥

भगवता च गीतायामिव तत्रोद्धवाय 'अहमात्मोद्धवामीषां भूतानां सुहृदीश्वरः ॥' इत्यादिना तेषां भावानामेव निरूपणं विहितम् । यैः स सांसारिकान् भावान् व्याप्य वर्तते ।

एवं समासतो निरूपितौ 'एतां विभूतिं योगं च ' ' ' 'इति पद्ये प्रयुक्तौ योगविभूतिशब्दौ । एतयोरेव योगविभूत्योर्निरूपणं ईशावास्योपनिषदि

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।

तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद् धनम् ॥ इति मन्त्रेण विहितम् । अत्र मन्त्रे पूर्वार्धेन सर्वस्मिन् जगति व्याप्तस्य भगवतो विभूतिसम्बन्धस्य निरूपणं विहितम् । भगवान् हि विभूत्या सर्वत्र व्याप्तः । अतएवोक्तं जगत्यां सर्वं जगत् ईशेनावास्यम् इति । उत्तरार्धेन चात्र मन्त्रे भगवतो योगसम्बन्धस्य ध्वननं विहितम् । तथाहि प्राणिनां भोगः भगवतः प्रवृत्तेन ( त्यक्तेन ) अंशेनैव भवति नाप्रवृत्तेन । लोकेऽपि यदा दाता दीयमानाद् वस्तुनः स्वस्वत्वनिवृत्तिं विदधाति तदैवापरः प्रतिग्रहीता तद् वस्तु उपभोक्तुं समर्थो नान्यथा । अतो भोगाय दातुः दीयमानाद् वस्तुनः स्वस्वत्वनिवृत्तिरावश्यकी । अत्रापि मन्त्रस्योत्तरार्धे भागे एतदेवोक्तं यत् भगवतस्त्यक्तेन भागेन भुञ्जीथाः, कस्यचिदपि प्राणिनः अत्यक्तं धनं मा गृधः इति । प्रवृत्तस्य च अंशस्य इतरस्मिन् सम्बन्धो योग एव । तथा चोत्तरार्धे योगसम्बन्धः त्यक्तेन भुञ्जीथा इत्युक्तवता ऋषिणा प्रतिपादित इति । एवं योगविभूतिशब्दार्थविषये प्रदर्शिता अभिनवैव काचिदेषा दिक् मन्ये प्रभवेद् विदुषां विनोदाय । इतिशम् ।

# संस्कृतभाषा राजनीतिश्च

(० बलराम स्वामी)

"यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्" इति खलु भगवतो वेदव्यासस्य महाभारतमधिकृत्य प्रतिज्ञा, तथापि व्यापकत्वेन गृह्यमाणाऽसौ संस्कृतवाङ्मयमधिकृत्य स्वीकर्तुं शक्यते। निखिलं हि तद् विज्ञानजातं, यत् किल मानवजातेरुन्नतसंस्कृतेः परिचायकं भवितुमर्हति, सन्निहितमास्ते संस्कृतवाङ्मये। धर्मविज्ञानम्, अर्थविज्ञानम्, भौतिकविज्ञानम्, शिल्पशास्त्रम्, साहित्यविज्ञानम्, राजनीतिशास्त्रम्, आयुर्वेदशास्त्रम्, अध्यात्मशास्त्रम्—इत्यादयः सर्वेऽपि मानवजीवनसम्बन्धिनो विषयाः संस्कृतवाङ्मये सुसन्निविष्टाः तथाच वैशद्येन व्याख्याता आसन् यथा न केवलम् व्याख्यातॄणामेव बुद्धिवैभवं प्रख्यापयन्ति किंतु प्रमाणयन्ति तदानीन्तनीम् भारतीयामुन्नतसंस्कृतिम् सत्या-पयन्ति च तदानीन्तनानाम् भारतीयानां महर्षीणामिममुद्घोषं यत्—

"एतद्देशप्रसूतस्य सकाशात् अग्रजन्मनः।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः" इति।

हन्त कालप्रभावेण वैदेशिकानामन्यायेन च हिमालयवत् उन्नतमस्तकानां भारतीयानां हृदयगुहाभ्यो निःसृताभिः ज्ञानविज्ञानधाराभिः सम्भृतो ज्ञानसमुद्रः शोषमगमत् मानवानां दौर्भाग्यमरुस्थले। तथापि यत् किञ्चित् विज्ञानमवशिष्यते तदपि पर्याप्तं प्रकटयितुं भारतस्य प्राचीनं गौरवम्। अध्यात्मम्, धर्मः, साहित्यञ्चेत्यादीना-मनेकेषां विषयाणां तत्त्वान्यद्यापि तथा रहस्यतया स्थितानि यथा तत्र मतिगतिमलभमाना वैदेशिका विद्वांसः स्वीकुर्वन्ति आत्मनोऽज्ञानम्।

अस्तु, राजनीतिर्नाम अस्माकम् प्रकृतोविषयः। अद्यत्वे हि संसारे राजनीतिशास्त्रे महान् विकासो वरीवर्ति। यद्यपि च भारतीयविज्ञानपराङ्मुखा भारतीया राजनीतिज्ञा वर्तन्ते राजनीतिक्षेत्रे परमुखापेक्षिणस्तथापि नैतत् मन्तव्यस्य किमपि कारणं यत् राजनीतिक्षेत्रे भारतमस्ति ज्ञानदरिद्रम्। इतिहासः प्रमाणमत्र यत् भारते महान्ति महान्ति साम्राज्यानि परमोन्नतिमासादितानि। को नाम भारतीयः महाराजमनोः, महर्षियाज्ञव-ल्क्यस्य च संहितासु सुनिरूपितं राजनीतितत्त्वंसमवलोक्य गर्वं नानुभवेत्। विश्व जानाति खलु परमकुशलम् अस्माकं महान्तं राजनीतिज्ञम् आचार्यचाणक्यम्। आसीत् तस्मिन् स्वर्णयुगे संस्कृतमेव भारतस्य राजभाषा राष्ट्रभाषा वा नाम। तस्मात् संस्कृतवाङ्मयनि-धाने एवं सुसङ्गृहीतमास्ते सर्वं राजनीतिसर्वस्वम्। तदस्मिन् निबन्धे संस्कृतसाहित्यात् यत्किञ्चिदुद्धृत्य प्रयतिष्ये संक्षेपेण राजनीतिस्वरूपम्परिचाययितुम्।

का नाम राजनीतिरिति विचारणायाम् नयन्ति अनया इति नीतिः, राज्ञां नीतिः राजनीतिरिति व्युत्पत्त्या यया खलु इतिकर्तव्यतया राजानः स्वकर्तव्यं प्रजानां परिपालनम्

बाधानिवारणञ्च नयन्ति नाम निर्वर्तयन्ति, किं वा नयन्ति नाम सम्पादयन्ति स्वस्य प्रजानाञ्च त्रिवर्गं धर्मार्थकामम्, सा राजनीतिः। सङ्क्षेपेण राज्ञः स्वार्थं परार्थो वा सर्वोऽपि क्रियाकलापः राजनीतिपदार्थेऽन्तर्भवति।

अथ कदा किं वा प्रयोजनमुद्दिश्य संसारे राजनीतेः प्रवृत्तिरभूदिति प्रश्ने कस्यैतस्य न किमप्युत्तरं दातुं शक्यं यतो हि नास्मिन् विषये कोऽपि ऐतिहासिको घटनाक्रमो लभ्यते। प्रयोजनविषये तावत् सङ्क्षेपेणेदं वक्तुं शक्यते यत् एकतो मत्स्यवृत्तिरपरतश्च सामाजिकवृत्तिरिति द्वयमेव राजनीतेः प्रवर्तकम्। अस्ति खलु मानवानां हृदयेषु प्रतिष्ठिता काऽपि पशुभावना यया प्रयुज्यमानास्ते न सङ्कोचमनुभवन्ति परार्थहननपूर्वकं स्वार्थसाधने। यथा खलु मत्स्येषु महत्तरो लघुतरं भक्षयित्वैव स्वजीवनं निर्वहतीति स्वभावस्तथैव दुर्बलान् बाधित्वा स्वार्थसाधनलक्षणो मानवस्वभावो मत्स्यवृत्तिरिति व्याख्यायते। अथ जागर्ति मनुष्येषु काऽपि धर्माख्या नामापरा सात्त्विकवृत्तिर्यदीयप्रेरणया ते स्वयमेव निवर्तन्ते परेषां बाधनात्। सेयं सात्त्विकवृत्तिरेव सामाजिकवृत्तिरित्याख्यातुं शक्यते। तदिदं वृत्तिद्वयमेव आसुरी दैवीति च नामान्तरेण निर्देष्टुं शक्यते। कल्पयितुं शक्यते च यदादिकालादेव प्रवर्तमान आस्तेऽस्मिन् संसारे देवासुरवृत्तिसङ्घर्षस्तस्यैव चायं परिणामो यत् प्रादुरासीत् राजनीतिः संसारे। तथा ह्युक्तमाचार्यश्रीकौटिल्येनास्मिन् विषये

"मत्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे। धान्यषड्भागम् पण्यदशभागम् हिरण्यं चास्य भागधेयं कल्पयामासुः।" इति।

तदित्थं मत्स्यवृत्तिमभिभूय सामाजिकवृत्तेः,नामान्तरेण धर्मवृत्तेरुत्कर्षस्थापनमेव राजनीतेः मुख्यम्प्रयोजनम्।

किन्तु न तावता राजनीतिः स्वलक्ष्यं सम्पादयितुं प्रभवति यावता नायाति तस्याः प्रसह्यकारिता। शुचिहृदया हि जना धर्मबुद्ध्या प्रवर्तितुमर्हन्ति नतु अशुचिहृदया,यावन्न तेषां पुरस्तात् तिष्ठति किमपि भयम्। ततश्च राजनीतौ प्रसह्यकारितामापादयितुं सन्निधापिता तस्यां काऽपि सर्वोन्नता शक्तिः दण्डशक्तिर्नाम।

तथाचोक्तं महाराजेन मनुना—

> तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम्।
> ब्रह्मतेजोमयं दण्डमसृजत् पूर्वमीश्वरः॥

सेयं दण्डशक्तिरेव राजनीतेर्मूलतत्त्वम् यद्द्वारा किमपि राज्यम् स्वप्रजाः स्वाभीष्टविधिनिषेधेषु बलात् प्रवर्तयितुं शक्नोति। अत एव तु बहुधा राजनीतिः दण्डनीतिनाम्ना प्रस्तूयते। यद्यपि च दण्डप्रधानत्वात् दृश्यते राजनीतौ कोऽपि हिंसादोषस्तथापि नैषा हिंसा स्पृशति किमपि राज्यम् अपराधिगामित्वात् तस्याः।

तथा चोक्तम् प्रजापतिना मनुं प्रति—

"मा भैषीः, कर्तॄनेनो गमिष्यति ।" इति

अथास्याः दण्डशक्तेर्नाम राजशक्तेः किं नाम स्रोतः किञ्चास्या आलम्बनम् इत्यत्र किमपि वक्तव्यम् । अद्यत्वे हि संसारे सर्वेषु प्रगतिशीलराष्ट्रेषु प्रजातन्त्रा नाम राजनीति-रुररीकृताऽऽस्ते ! प्रजातन्त्रे हि प्रजा एव राजशक्तेरुद्गमत्वेन स्वीक्रियन्ते स्वीक्रियते च राज्यसंस्था तदीयमालम्बनम् । नास्मिन् युगे राजशक्तिः कस्यापि कुलस्य परम्परागतोधिऽ-कारः किन्तु प्रजा यं कमपि पुरुषधौरेय-स्वप्रतिनिधित्वेन निर्वक्ति स एवास्या राजशक्ते-रालम्बनम् । न च सोऽपि राजा वा राष्ट्रपतिर्वा स्वच्छन्दम् राजशक्तिं व्यवह्तुं मीष्टे किन्तु लिखितविधानानुरोधेनैव प्रवर्तते स्वकर्तव्येषु । तदित्थं समुत्तिष्ठति विचारो यत् किं भारतीया राजनीतिः प्रजातन्त्ररूपा राजतन्त्ररूपा वा । अत्रेदमेव वक्तव्यं यत् यथा किल अद्य प्रजातन्त्रस्येयं परिभाषा क्रियते यत् या खलु शासन रूपा प्रणाली प्रजाद्वारा स्यात्, प्रजायाः कृते च स्यात् सा प्रजातन्त्रारूपा इति न तथाऽस्याः परिभाषायाः शब्दार्थैः सह संवादम्भजति भारतीया राजनीतिः यतो हि सर्वेषु भारतीयेषु राजनीतिशास्त्रेषु राजनीतेरारम्भप्रस्तावे प्रजापतिद्वारा राज्ञे निरूपिता मन्यते राजशक्तिः । न चास्मिन्नंशे प्रजाद्वारेति वर्तमानपरिभाषांशेन सह सा संवदितुमर्हति ।

यतो हि प्रजाद्वारेतिसिद्धान्तस्य व्यवहारो यथा अद्यत्वे प्राप्तवयस्कमतद्वारा निर्वाचनप्रक्रियायां दृश्यते न तथा भारतीयपद्धतौ ।

तथापि प्रजातन्त्रस्य भावार्थेन सह सा सर्वथा संवादमर्हति भवति च भावार्थेन भारतीया राजनीतिः सर्वथा प्रजातन्त्रा । तथाहि वर्तमानपरिभाषायाम् विशेषणत्रयसन्नि-वेशस्यायमेवाभिप्रायो यत् राजनीतिः सर्वात्मना प्रजापक्षपातिनी भवेत् ।

सोऽयमभिप्रायः भारतीयराजनीतिसूत्रेषु सर्वतो मुख्यत्वेन प्रतिष्ठापितो वर्तते । वस्तुतः प्रजातन्त्रत्वं नाम न कस्यचित् पद्धतिविशेषस्य स्वाभाविको धर्मः । अयन्तु शासकानां हृदयेषु प्रतिष्ठितः कोऽपि महान् सिद्धान्तः यस्तदीयशासनप्रक्रियासु परिस्फुरति। तमिमं सुन्दरं सिद्धान्तम् भारतीयराजनीतिशास्त्राणि शासकानां हृदयेषु तथा प्रतिष्ठा-पयन्ति यथा अनेनैव सिद्धान्तेन सह धमनीषु सञ्चरन् तथा व्याप्नोति शासकानामा-त्मसु यथा सर्वात्मना प्रजाहितमयं जायते शासकानां जीवनमेव । न भवति प्रजाभ्यः पृथक् राज्ञः काऽपि सत्ता । कियत् सुन्दरमिदं सूत्रम् यत्—

"प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम् ।
नात्मप्रियं हितं राज्ञः प्रजानां हि प्रियं हितम् ॥"

स्वभागभृत्या दास्यत्वे प्रजानां च नृप कृत ।
ब्रह्मणा स्वामिरूपस्तु पालनार्थं हि सर्वदा ॥
प्रजापीडनसन्तापात् समुद्भूतो हुताशन ।
राज्ञ कुलं श्रियं प्राणांश्चादग्ध्वा न निवर्तते ॥

तमिम सत्य शिव सुन्दर च सिद्धान्तमनुरुध्य प्रवर्तमानाम् भारतीया राजनीतिं को नाम वक्तु शक्नोति यत् न सा प्रजातन्त्रेति ।

---

## राजसंस्थासङ्घटनम्

इदानीं यावदस्माभि भारतीयराजनीते सैद्धान्तिकरूप संक्षेपेण निवेचितम् । अत पर तस्या व्यावहारिकं रूपमपि यत् किञ्चिन्निदर्शनीयम् । यद्यपि प्रजाना हितानि प्रियाणि च राज्ञे समर्पितानि तथापि न कोऽपि राजा राष्ट्रस्यापि तेषा सरक्षणकार्यं स्वयमेकाकी सम्पादयितु प्रभवति । भवति तत्र जनधनापेक्षा । भवति चेत्थं धनजनसमाहारेण महती राज्यसस्था सङ्घटिता । यथा चाद्यत्वे राज्यसंस्थासु भवन्ति त्रयो विभागाः—व्यवस्थापरिषद्, शासकमण्डलम्, न्यायविभागश्चेति । तथैव त्रयोऽप्येते विभागा समुपलभ्यन्ते भारतीयराजनीतिषु । तानेतान् क्रमेण निरूपयिष्याम । प्रथम हि व्यवस्था परिषद् गृह्यताम् । राज्यकर्तव्यान्यनुरुध्य अनेके विधेया निषेध्याश्च विषया समुपस्थिता भवन्ति राज्ञां पुरस्तात् ये नियमतया स्वीकृता एव शासने प्रचरितुमर्हन्ति । तेषा नियमत्वोपपत्तये प्रथमं सर्वेऽपि विषया व्यवस्थापरिषदि प्रस्तूयन्ते तत्र च सविचारविमर्शं सुपरीक्ष्य स्वीकृता एव विधेयका शासनेषु गृह्यन्ते इति सुनिर्दिष्टमिदानीन्तन व्यवस्थापरिषदा कार्यम् ।

अस्माक राजनीतिशास्त्रेषु व्यवस्थापरिषत्स्थानीया सुनिरूपिता कापि धर्मपरिषत् या धर्मनिर्धानेषु राज्ञो निरपेक्षतया प्रवर्तमाना अङ्कुशायते राज्ञामनुचितप्रवृत्तिषु तथाहि—

चत्वारो वेदधर्मज्ञा पर्षत् त्रैविद्यमेव वा ।
सा ब्रूते य स धर्म स्यात् एको वाध्यात्मवित्तम ।

व्यवस्थापरिषदा सुनिरूपितानां विधेयकानां व्यवहारे प्रवर्तनार्थं भवति साम्प्रत मेक शासकमण्डलम् यन्मन्त्रिमण्डलनाम्ना निरुच्यते । तदिद शासकमण्डलम् अस्माकं राजनीतौ प्रकृतिमण्डलनाम्ना व्यपदिश्यते । तथाहि—

पुरोधाश्च प्रतिनिधि प्रधान सचिवस्तथा
मन्त्री च प्राड्विवाकश्च पण्डितश्च सुमन्त्रकं
अमात्यो दूत इत्येते राज्ञ प्रकृतयो दश ॥ शुक्रनीति ।

यथाहि खलु साम्प्रतं मन्त्रिमण्डलमध्यगता मन्त्रिणो विभिन्नेषु विभागेषु पृथक पृथक् कर्तव्यचिन्तका भवन्ति तथैवैताः प्रकृतयोपीतीति तासां कर्तव्यावलोकनेन सुस्पष्टं भवति । तथाहि—पुरोहितविषये कौटिल्यवचनम्—

पुरोहितं प्रकुर्वीत दैवज्ञमुदितोदितम् ।
दण्डनीत्यां च कुशलं अथर्वाङ्गिरसे तथा ॥

सोऽयं पुरोहितः राष्ट्रहितचिन्तासु नियुज्यमानोऽपि राज्ञां निरङ्कुशप्रवृत्तिदमनाय तेषामाचार्यत्वेन गुरुत्वेन पितृत्वेन च स्वीकृतः । तथाहि—

"षडङ्गवित् साङ्गधनुर्वेदविद्यार्थधर्मवित् ।
यत्कोपभीत्या राजापि धर्मनीतिरतो भवेत् ॥
नीतिशास्त्रास्त्रव्यूहादिकुशलस्तु पुरोहितः ।
सैवाचार्यः पुरोधा यः शापानुग्रहयोः क्षमः ॥

(२) पुरोहितादनन्तरं राज्ञः प्रतिनिधिः स्वीकृतः । तथाहि—

"कार्याकार्यप्रविज्ञाता स्मृतः प्रतिनिधिः खलु ।
अहितं चापि यत कार्यं सद्यःकर्तुं यदोचितम् ॥"
अकर्तुं यद्धितमपि राज्ञः प्रतिनिधिः सदा ।
बोधयेत् कारयेत् कुर्यात् न कुर्यात् न प्रबोधयेत् ॥

सोऽयं प्रतिनिधिरद्यतनोपराष्ट्रपतिवत् प्रतीयते ।

(३) प्रतिनिधेरनन्तरम् प्रधानो नामाधिकारी योऽद्यतनप्रधानमन्त्रिस्थानीयः । तथाहि—

"सर्वदर्शी प्रधानस्तु" इति ।

(४) प्रधानानन्तरम् सचिवः यः वर्तमानरक्षामन्त्रिस्थानीयः । तथाहि—

"सेनावित् सचिवस्तथा ।

(५) अथ मन्त्री नाम प्रकृतिः वर्तमानपरराष्ट्रमन्त्रिस्थाने । तथाहि—

"सामदानञ्च भेदश्च दण्ड केषु कदा कथम्
कर्तव्यः किं फलं तेभ्यो वहु मध्यं तथाल्पकम् ।
एतत् सञ्चिन्त्य निश्चित्य मन्त्री सर्वं निवेदयेत् ॥

(६) अथ प्राड्विवाको नाम वर्तमानन्यायमन्त्रिस्थानीयः । तथाचोक्तम्—

लोकशास्त्रनयज्ञस्तु प्राड्विवाकः स्मृतः सदा ।

(७) सुमन्त्रो नाम राज्याधिकारो अर्थमन्त्रिस्थानीयः तथाहि—

आयव्ययप्रविज्ञाता सुमन्त्रः स च कीर्तित ।

(८) दूतो नामाष्टमः वर्तमानराजदूतस्थानीयः —

"षाड्गुण्यमन्त्रविद् वाग्मी वीतभी; दूत इष्यते ।

(९) नवमः पण्डितो नाम राज्याधिकारी यो राज्यस्य धार्मिककार्येषु अध्यक्षतया नियुज्यमान आसीत् किन्तु अद्यत्वे धर्मनिरपेक्षराजनीतियुगे न सन्निवेश्यते मन्त्रिमण्डलेषु ।

(१०) अथ अमात्यो नाम दशमो राज्यकार्याध्यक्षः यः खलु इदानीं गृहमन्त्रीति व्यपदिश्यते । तथाहि—

"देशकालप्रविज्ञाता ह्यमात्य इति कथ्यते । इति ।

तदित्थं शुक्राचार्येण दश प्रकृतयो निरूपिता । उक्तञ्च—

"विना प्रकृतिसन्मन्त्रात् राज्यनाशो भवेद्ध्रुवम् ।
रोधनं न भवेत् तस्मात् राजस्ते स्युः सुमन्त्रिणः ॥

यद्यपि साम्प्रतं दैवकोपजानां राष्ट्रक्षतीनां निवारणाय प्रयत्यते बहुविधं राष्ट्रपतिभिः, नियुज्यन्ते चास्मिन् कार्ये बहवो वैज्ञानिकाः । तथापि भौतिकविज्ञानोत्कर्षकालेऽप्यस्मिन् न किञ्चित् तादृशविज्ञानमाविष्कृतं येन दैवीनां राष्ट्रविपदामनुत्पाद एव स्यात् । आसन् पुरा भारते तानि विज्ञानानि येषां विद्वांसः पुरोहिता नाम अभवन् सततं जागरूका राष्ट्रहितेषु रक्षन्ति स्म च राज्ञां प्रवृत्तिं सर्वथा स्वाङ्कुशे । किन्तु अद्यत्वे तथाविधानाम् आथर्वणवैज्ञानिकानामभावात् वर्तमानराजनीतेर्महती शून्यता । अपि च वर्तमानवैज्ञानिका भवन्ति राजनीतेर्भृत्या इति राजनीतेरुपरि तेषामङ्कुशाभावात् संसारे प्रवर्तयन्ति तत्साहाय्येन विश्वसङ्कटम् यदा तदा स्वच्छन्दम् ।

यथा च खलु इदानीं शासनव्यवस्थामुद्दिश्य राष्ट्रं प्रान्तभेदेन विभज्य विभिन्नेषु प्रान्तेषु पृथक् पृथक् अधिपतयो नियुज्यन्ते सैषा व्यवस्था प्रागप्यासीत् या सामन्त-राज महाराज स्वराट्-सम्राट्-विराट्-सार्वभौमानां शास्त्रेषु निरूपितैः कार्यैः लक्षणैश्च स्पष्टं प्रतीयते । किञ्च यथेदानीं राज्यव्यवस्थामनुरुध्य अनेके राजकीया विभागाः कल्पन्ते प्रतिभागं च पृथक् अध्यक्षास्तेषां कर्तव्यानां सुनिरूपणाय भवन्ति तथैवासीत् सुव्यवस्थिता राज्यव्यवस्था प्रागपीति कौटलीयार्थशास्त्राध्ययनेन स्पष्टं प्रतीयते । तथाहि तत्र—राजस्व-व्यापार-कृषि-शुल्क-सुरा-सेना-वनादिनाम्ना पृथक् पृथक् विभागास्तेषां कर्तव्यानि यथावत् चाणक्येन सुनिरूपितानि । यथा—

(१) सन्निधाता नामासीत् राज्यस्य प्रधानकोषाध्यक्षः

(२) समाहर्ता नाम राज्यस्य करव्यवस्थापकः

(३) नागरिको नाम स्वाधिकृतनगरसुरक्षाधिकारी

(४) शुल्काध्यक्षो नाम बाह्यम्, आभ्यन्तरम्, आतिथ्यञ्चेति त्रिविधशुल्कानां व्यवस्थापकः । तत्र स्वदेशजानां वस्तूनां शुल्कं बाह्यम् । राजधानीनीतानां द्रव्याणां शुल्कम् आभ्यन्तरम् । आतिथ्यं च द्विविधम्—निष्काम्यम् प्रवेश्यं च । तत्र स्वदेशजानां द्रव्याणां विदेशगमने निष्काम्यशुल्कं यदिदानीं निर्यातकरनाम्ना कथ्यते । विदेशेभ्यः स्वदेशे समागतानां द्रव्याणां प्रवेश्यशुल्कं यदद्यत्वे आयातकर इति कथ्यते ।

(५) सीताध्यक्षो नाम कृषेरधिकारी

एवमन्येषामपि सेना-सुरा-पण्यादिविभागानां कार्याणि सुविभक्तं निरूपितानि यानि विस्तारभयेनात्र न निदर्शयितुं शक्यते ।

यथाचेदानीं खलु राजकर्मचारिणां नियुक्तौ शिक्षा कार्यक्षमता चापेक्ष्यते तथैवासीद् व्यवस्था भारतीयराजनीतावपि । तथाचोक्तम्—

"प्राज्ञत्वमुपधाशुद्धिः अप्रमादोऽभियुक्तता
कार्येषु व्यसनाभावः स्वामिभक्तिश्च योग्यता ।" इति,

## (३) न्यायविभागः—

शासनात् परं न्यायनिर्णयोऽपि राज्ञां कर्तव्यम् तदर्थं च आसीत् व्यवस्था न्यायविभागस्य। तत्र च नृपतिरेव प्राधान्येन न्यायाध्यक्षः। यथोक्तम्—

व्यवहारान् स्वयं पश्येत् विद्वद्भिः ब्राह्मणैः सह।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥

किन्तु राष्ट्रव्यापि कर्तव्यमेतत् न शक्यते राज्ञा स्वयमेकाकिना सम्पादयितुमिति तदर्थं भवति व्यवस्था न्यायाध्यक्षान्तराणाम् नियुक्तेः। तथाहि—

"यदा न कुर्यान्नृपतिः स्वयं कार्यविनिर्णयम्
तदा तत्र नियुञ्जीत ब्राह्मणं वेदपारगम्
दान्तं कुलीनं मध्यस्थं अनुद्वेगे वरं स्थितम्
परत्र भीरुं धर्मिष्ठं उद्युक्तं क्रोधवर्जितम् ॥ इति।

आसीच्च न्यायनिर्णयाय न्यायसभायाः व्यवस्था। तथाहि—

श्रुताध्ययनसम्पन्नाः धर्मज्ञाः सत्यवादिनः
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः
सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः
समाहितमतिः पश्येत् व्यवहाराननुक्रमात्।

तदित्थं—न्यायाध्यक्षः, प्राड्विवाकः अन्ये सभासदश्चेति न्यायसभास्वरूपम्। तत्र प्राड्विवाको नाम मुख्यतया अभियोगस्य विवेचकः। स हि उभयपक्षं पृच्छति ततश्च विवेचयति सत्यासत्यम्। अत एव च पृच्छतीति प्राट् विवेचयतीति विवाक् प्राट् च विवाक्चेति निरुक्त्या तस्य प्राड्विवाकसंज्ञा।

आसीच्च सुव्यवस्थिता व्यवहारदर्शनप्रणाली। तथाहि—

'स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः।
आवेदयति चेद् राज्ञो व्यवहारपदं हि तत्।"

इतिवचनानुसारं प्रथमम् प्रार्थिना स्वयं निवेदितोऽभियोगो विचाराय स्वीक्रियते स्म। ततश्च प्रार्थिना सप्रश्नोत्तरं निरूपितः सर्वोपि व्यवहारविषयः प्राड्विवाकेन लिख्यते। सेयं व्यवहारस्थापना नाम। ततश्च सः राजशासनपत्रादिना प्रत्यर्थिनं सूचयति न्यायसभायामुपस्थातुम् नियते दिने समये च। यथासमयं चार्थिप्रत्यर्थिनोरुपस्थितौ प्रवर्तते स्म व्यवहारविचारः। स च चतुर्धा विभक्तः—भाषापादः, उत्तरपादः, क्रियापादः, साध्यसिद्धिपादश्च। तत्र प्रथमं प्राड्विवाकः सर्वेषां सभ्यानां समक्षम् प्रत्यर्थिनोऽग्रे अर्थिनोवक्तव्यं पुनर्गृह्णाति अपेक्षते च तत्र प्रथमवक्तव्येन सर्वथा सादृश्यम्। विसादृश्ये हि हीनवादी भवति अर्थी। तथाहि—

"अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः।
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः ॥" इति :

प्रश्नोत्तरद्वारा गृह्यमाणमर्थिवक्तव्यम् आवापोद्वापद्वारा संशोध्य प्राड्विवाकः करोति लेखबद्धम्। सोऽयं प्रथमः भाषापादः। अथ अर्थिनः आक्षेपाणां निराकरणरूपम् प्रत्यर्थिनो वक्तव्यं गृह्णातीति उत्तरपादः। ततश्च पुनरर्थिपक्षस्य प्रमाणानि संगृह्णाति

विवेचयति च सभ्यान्तरैः सह पक्षद्वयम् इति तृतीयः क्रियापादः। अनन्तरम् प्रमाणबलाबलमपेक्ष्य करोति न्यायान्यायपक्षनिर्णयम्। तत्र च यदि वादिनः पक्षो न्यायसम्मतः प्रमीयते तदा सा वसिद्धिपादः - अन्यथा तु साध्यहानिपादः। तस्मिन्—

उपर्युक्तनियोगदर्शनप्रक्रियायाम् दिव्यं लौकिकं च द्विविधं प्रमाणं स्वीक्रियते स्म। तत्र लौकिकं यथा—

"प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तिता।" इति।

दिव्यन्तु—

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये।" इति।

किन्तु यावच्छक्यं लौकिकप्रमाणोपलब्धौ सत्यां न स्वीक्रियते स्म दिव्यं प्रमाणम्। लौकिकाभावे एव तु कदाचित् दिव्यमनुमन्यते स्म। यथोक्तम्—

यद्येको मानुषीं ब्रूयात् अन्यो ब्रूयात्तु दैविकीम्।
मानुषीं तत्र गृह्णीयात् नतु दैवीं क्रियां नृप।"

अथ न्यायान्यायनिर्णयानन्तरम् अन्याय्यपक्षस्य दण्डावसरे अपराधभेदेन उत्तमाधमा दण्डव्यवस्था निरूपिता। तथाहि—

धिग्दण्डस्त्वथ वाग्दण्डो धनदण्डो वधस्तथा।
योज्या व्यस्ताः समस्ता वा ह्यपराधवशादिमे।

तत्र धिग्दण्डो नाम धिक्कारदानम्। वाग्दण्डो नाम कठोरवाक्यैः भर्त्सनम्। धनदण्डो नाम धनापहरणम्। स च पणादारभ्य पूर्वसाहसम्, मध्यमसाहसम्, उत्तमसाहसमिति क्रमेण वर्धमानः सर्वस्वापहरणपर्यन्तः अपराधानां गौरवतारतम्यापेक्षी। वधो नाम शारीरदण्डः। सोऽपि ताडनम्, एकाङ्गवधः, प्राणदण्डश्चेति त्रिविधः। प्राणदण्डोऽपि चित्रः शुद्धश्चेति द्विविधः। तत्र चित्रवधो नाम सकष्टं प्राणहरणम्, यथा दाहो जलमज्जनं वा। शुद्धवधो नाम सरलतया प्राणहरणम्। किन्तु प्राणदण्डः प्रायशो वर्जितमेवासीत्। उपर्युक्तदण्डेषु च कस्यामवस्थायां कीदृशो दण्डो विधेय इति सविस्तरं प्रतिपादितं शास्त्रेषु। न च केवलं दण्डविधानमेव किन्तु अपराधिनां शिक्षापूर्वकं सन्मार्गानयनमपि नीतिशास्त्राणामभिप्रेतम्। तथाहि—

एवंविधानसाधूंश्च संसर्गेण च दूषितान्।
दण्डयित्वा च सन्मार्गे शिक्षयेत्तान् नृपः सदा।

तदित्थं स्वराष्ट्रसम्बन्धी राजनीतिभागः दिग्दर्शनविधया किञ्चित् प्रदर्शितः। स्वराष्ट्रवत् परराष्ट्रसम्बन्धिनी राजनीतिरपि सविस्तरं राजनीतिशास्त्रेषु व्याख्याता। तत्र च सन्धिविग्रहयानासनसंश्रयद्वैधीभावाख्यम् षाड्गुण्यम् परराष्ट्रनीतेर्मुख्यमङ्गम्। न तु अस्मिन् संक्षिप्ते निबन्धे पृथक् पृथक् व्याख्यातुं शक्यम्।

निबन्धस्यायमेवाभिप्रायो यत् राजनीतिसम्बन्धिनः सर्वेऽपि विषयाः संस्कृतसाहित्ये पुष्कलतया सुनिरूपिताः भारतीयानां दौर्भाग्यवशेन न ते शिक्षासु समावेश्यन्ते भारतीयसंस्कृतिपराङ्मुखैः शिक्षाधिकारिभिः। आसीत् स किल कालोऽस्माकं यत्र यत् किमपि ज्ञातव्यमासीद् भारतस्य, अलभ्यत तत् संस्कृते। इति शम्॥

# संस्कृतशिक्षाप्रणाली

ले०—श्रीकन्हैयालालः शास्त्री

विद्वज्जनवरिवस्यां नित्यं कमलासनस्थितामार्याम् ।
शिक्षास्वरूपिणीं तां वाग्देवीं संनमस्यामः ॥

अस्ति हि संस्कृतभाषा सर्वभाषाजननी संसारसभ्यताखनिः सर्वभाषामूर्धन्या च। सर्वा अपि संस्कृतयस्तत्र व्यासतः समासतो वा निबद्धाः । व्यावहारिकी आध्यात्मिकी सांस्कृतिकी आधिदैविकी च सर्वविधा अपि सभ्यता अस्यां संग्रथिताः । अत एव तद्भाषाविदो भारतीयस्येयं सगर्वोक्तिः—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥ इति

भवन्ति च पूर्वं भारतीयाः सर्वसंस्कृतिरत्नाकरमिमामधीत्य सर्वविदः, इति नाविदितं पुरातत्वेतिहासविदां विदाम् । न ते केवलं शुष्कवैयाकरणा जरन्नैयायिका मीमांसकदुर्दुरूढा वा एवाभवन् । अपि तु राजनीतावर्थशास्त्रे, व्यवहारे, विज्ञाने, ज्ञाने, दर्शने च परिनिष्ठिताः। सर्वा अपि विद्याः सकलाश्च कला अधिगम्यन्ते स्म तैः षोडशवर्षात्मके ब्रह्मचर्य एवाश्रमे । प्रतीयते चैतत्स्पष्टं पुरातनग्रन्थावलोकनेन । दशकुमारचरित-कादम्बर्यादिषु राजकुमाराणां सर्वविद्यावित्त्वं तत्तत्कलाभिज्ञत्वं च निरूपितम् । न केवलं तत्र तेषां धनुर्विद्यायां युद्धविद्यायामेव वा नैपुण्यं निरूपितमपि तु द्यूत-नाट्यचौर्यादिकलाभिज्ञत्वं ज्यौतिषादिविद्याविज्ञत्वं चापि प्रतिपादितम् । रघुवंशेऽपि पंचमे सर्गे कौत्सस्य चतुर्दशविद्याविज्ञत्वं स्पष्टमेव । तेन च सर्वविधाऽपि विद्याधीता तेषां सर्वतन्त्रस्वतन्त्राणां ब्रह्मर्षीणां सविध एव । तदानीमिमामेव संस्कृतभाषा-मधीयाना भवन्तिस्म सर्वविदः, इदानीं तु अधीत्यापि बहूनि वर्षाणि तामेव भाषां न भवन्त्येकभाषाविदोऽपीति महदाश्चर्यम् । इदानीं तु (अनन्तपारं किल शब्दशास्त्रम्) इत्याभाणकं निदर्शयन्तो यापयन्ति सर्वमायुर्व्याकरणाध्ययने. परं तदापि विचिकित्सन्ते शब्दसाधुत्वे । व्याकरणाध्ययनस्य यत्प्रयोजनम् रक्षोहागमलध्वसन्देहाः इतिसन्देह-प्रागभाव रूपं तदपि दूरापास्तम् । वैषम्येऽत्र प्रत्यक्षं दृग्गोचरीक्रियमाणे मूलं निदानं तु शिक्षाप्रणाल्या वैषम्यमेव । अत एव संस्कृतभाषाविदां व्यवहारे प्रतिदिनमेधमानं

र्तान्निदानं निभाल्य तत्प्रतिचिकीर्षुभि संस्कृतभाषायास्तदध्येतृणां च दीना दशा निरा-
करयितु विहितसङ्कल्पै कैश्चिद्विद्वद्भिर्वर्तमानाया संस्कृतशिक्षाप्रणाल्या परिवर्तन संशोधन
वाऽपेक्ष्यते ।

कतमा संस्कृतशिक्षाप्रणाली श्रेयसीति विवेचनात् पूर्वं "वाक्यार्थज्ञाने पदार्थ-
ज्ञानस्य कारणत्वमिति न्यायादादौ शिक्षा—शब्दार्थविवेचनमावश्यकम् । शिक्षाशब्दो
हि शिक्ष—धातोरचि टापि शक् धातोरिच्छासनि" अप्रत्ययात्स्त्रियामप्रत्यये टापि वा
निष्पद्यते । शिक्षयति बोधयत्यैहिकामुष्मिक सर्वविधव्यवहार या इति व्युत्पत्त्या
शक्तो भवितुमिच्छति यया सर्वविधलौकिकव्यवहारे इति व्युत्पत्त्या वा सर्वविध-
लौकिकव्यवहारविषयकबोधसम्पादयित्री तदनुकूल-शक्ति-सम्पादनेच्छा वा नाम
शिक्षाशब्दप्रवृत्तिनिमित्तम् । शिक्षयैव मनुष्य ऐहिकानामुष्मिकान् समानपि विषयान्
जानाति, शिक्षयैव तत्तद्व्यवहारसम्पादने समर्थश्च जायते । एवञ्च यया हि मनुष्य
सर्वविधलौकिकव्यवहारबोधने आमुष्मिकधर्ममोक्षौपयिके च ज्ञाने, तत्सम्पादने च
शक्तो भवेत् सैव हि शिक्षा नाम । सूक्ष्मरूपेण वर्तमानाना तिरोहिताना वा नाना-
शक्तीनामुद्भावन शिक्षाया एव कार्यम । आसुरीणां सम्पदा ह्रास विधाय धृतिदमाद-
मास्तेयादिदैवसम्पदा च प्रादुर्भाव कृत्वा दानवतापरिहारपूर्वकं मानवस्य मानवता-
सम्पादन शिक्षाया एव उद्देश्यम ।

एषा च बहिरङ्गान्तरङ्गोभयभेदेन अङ्गद्वयवती । बाह्यान्यङ्गानि तावत् व्रतशब्दे-
नोपदिष्टानि शास्त्रेषु । भवन्ति स्म पूर्वं केवल तद्व्रतपालका अपि ब्रह्मचारिणो ये
व्रतस्नातकाभिधेयता भजन्ते स्म । तानि च व्रतानि यद्यपि शिक्षासाधनानि तथापि
साधनसाधनवतोरभेदमाश्रित्य शिक्षापदव्यपदेश्यान्यपि ।

तेषा व्रतानां नियमानाञ्च श्रुतिस्मृत्यादिषु विस्तरेणोपलब्धि । यथा याज्ञवल्क्य-
स्मृतौ स्नातकधर्मप्रकरणे स्नातकधर्मा विस्तरशो निरूपिता । तत्र ब्रह्मचर्यं शिक्षाया
प्रधानमङ्गम । नहि ब्रह्मचर्यमन्तरा शिक्षाधिगति , नवाऽन्ये नियमा कथमपि पालयितुं
सुशका , अत सर्वप्रथम ब्रह्मचर्यस्योपदेश । किन्त्ववधेयमत्र यत् नात्र ब्रह्मचर्याश्रमे
ब्रह्मचर्योपदेशे च ब्रह्मचर्यशब्द स्त्रीवीर्यरक्षणरूपेऽर्थे एव सङ्कुचित , अपि तु विभिन्ने
व्यापके चार्थे प्रयुक्तो वर्तते । यथा— ब्रह्म=वेद =विद्या तदध्ययनार्थं व्रतमपि
तादर्थ्याद् लक्षणया ब्रह्म तच्चरतीति ब्रह्मचारी, तदर्थं चर्यं च ब्रह्मचर्यमिति
व्युत्पत्त्या सशब्द विद्याध्ययनार्थं शिक्षार्थं वा अपेक्ष्यमाणानां सर्वविधाना व्रताना
नियमाना चोपलक्षक । किन्त्वन्येषा व्रताना वीर्यरक्षारूपव्रतसापेक्षत्वात् स शब्द

तत्र प्राधान्येन रूढिमिवोपगतः। ब्रह्मचर्यवत् गुरूपसत्त्यादिकमप्यपेक्षितम्। उपनीतो हि बालकः पितृभ्यां गुरवे समर्प्यते। तत आरभ्य आस्नानं तस्य आचार्य एव माता, पिता, सम्बन्धी गुरुश्च। यदा स आत्मानं सर्वथा गुरवे निवेदयते, तमेवात्मनः सर्वस्वं मन्यते, तदा कथं गुरुराचार्यो वा तस्मै स्वहृदयगतमपि भावं न प्रकाशयेत्। गुरुशिष्ययोरेष सम्बन्धः अतीव विशुद्धो विलक्षणः सर्वान्तरतमश्च। एष तयोरत्यन्तसन्निधिं तादात्म्यमेव च स्थापयति। तत्र रात्रिन्दिवं गुरुपरिचर्यां चरन् स कथं न विद्यामवाप्नुयात्। "गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा। अथवा विद्यया विद्या" इति त्रिषु विद्यासाधनेषु गुरुशुश्रूषैवेतरां द्वयीमतिशेते। इतरोपायद्वय्याधिगताऽपि विद्या विनयाधानफलप्रदत्वाभावात् न सार्थिका। अतएव चाणक्येनार्थशास्त्रे "शुश्रूषाश्रवणग्रहणधारणविज्ञानोहापोहतत्वाभिनिविष्टबुद्धिं विद्या विनयति नेतरम्।" इत्युक्तम्। गीतायामपि भगवता "तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया। उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः" इति वचनेन गुरुशुश्रूषाया महत्त्वमुक्तम्।

एवमन्येऽपि आचारादयो नानपेक्षिताः। आचारादीनामपि शिक्षायामत्युपयोगित्वेन तदनन्तरम् आचारशिक्षाया एव सर्वप्रथममाचार्यैः शिष्याय शासनात्। तथा हि उपनीय गुरुः शिष्यम् शिक्षयेच्छौचमादितः। आचारमग्निकार्यञ्च सन्ध्योपासनमेव च। वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्॥" एवमेकान्तवासोऽपि शिक्षायै अत्यावश्यकः। अतएव नगरेभ्यो ग्रामेभ्यश्च अतिदूरं निर्जने शुद्धजलवायुसम्पन्ने, मनोरमनानादृश्यसमाकुले प्राकृतिके स्थाने ऋषीणां सात्त्विका आश्रमा शिष्याणाम् अध्ययनाध्यापनस्थानान्यासन्। न केवलं वेदकाले, महाभारतकाले एव वा अपितु बौद्धकाले तक्षशिलानालन्दादिविश्वविद्यालया अप्येतादृशे स्थाने एव स्थापिता अभूवन्। आसीदेषैव पद्धतिर्गुप्तकाले हर्षकाले च। पूर्वमभिहितमेतत् यत् स्वस्थं शरीरं मनश्च शिक्षायै अपेक्ष्यते। बुद्धिर्हि मनःस्वास्थ्यमपेक्ष्यते, मनःस्वास्थ्यं च शरीरस्वास्थ्यायत्तम्। मनःशरीरसम्पत्तिश्च सर्वविधराजसतामससामग्रीबहिर्भूतेषु प्राकृतिकसात्विकसाधनसम्पन्नेषु एतादृशेष्वाश्रमेष्वेव सम्भवति। शिक्षकाणां सात्त्विकी वेषभूषा, तदीयाः सात्त्विका आचारादयश्च प्रभविष्णवोऽवर्तन्त। एवमाश्रमेषु निर्धनानां धनिकानां च राज्ञां सामन्तानामन्येषां च सामान्यविद्यार्थिनां रात्रिन्दिवं समव्यवहारः परस्परसम्बन्धश्च भाविनीं राष्ट्रियसम्पत्तिमुपक्रमत एव तेषां हृदयेष्वंकुरयति स्म। एतदेव शिक्षाया बाह्यमङ्गम्।

शिक्षाया अन्तरंगसाधनेषु च षडङ्गवेदवार्तादर्शनपुराणज्यौतिषायुर्वेदराज-

नीत्यादिविषयाणामध्ययनस्य समावेश । किं बहुना सामान्यतश्चतुर्दशविद्याना चतु षष्टिकलाना च यावच्छक्य ज्ञानमप्यत्रैवान्तर्भूतम् । एतदङ्गद्वयोपेता शिक्षा प्रभवेत् उपर्युक्तशिक्षाशब्दार्थप्राप्तये । अत एतादृशशिक्षासम्पन्नाय तादृशी प्रणाल्येव श्रेयसी मन्तव्या, याङ्गद्वयीविशिष्टशिक्षासम्पादनाय समर्था स्यात् । न चाधुनिक्या सस्कृतशिक्षाप्रणाल्या एकस्यापि विषयस्यासन्दिग्ध ज्ञान जायते, दूरमास्ता समेषां विषयाणा ज्ञानस्य कथा। इदानीं प्रधानतया न्यायव्याकरणसाहित्यायुर्वेदादीनामेवाध्ययन क्रियते । तत्र व्याकरण हि वेदाङ्गम् । अर्थात् उपेयभूतवेदोपायमात्रम । आधुनिकैश्च सर्वमप्यायु तदध्ययने एव याप्यते किन्तु तदापि नासाद्यते असन्दिग्धता शब्दसाधुत्वज्ञाने । कारण त्वत्र वर्जयित्वा सिद्धान्तकौमुदीं नास्त्येकोऽपि एतादृशो ग्रन्थो य शब्दसाधुत्व बोधयेत् । केवल वादविवादपरा मनोरमाशब्दरत्नशेखरादयो ग्रन्था सन्ति येषामध्ययने व्यर्थमेवाध्येतुरायुर्व्येत्येति न च किमप्यासाद्यते तेन। एषैव दशा न्यायस्य । पूर्वं तु न्यायो दर्शनमेव न, केवल कथानियमनिरूपणपर शास्त्रम्, तत्रापि आधुनिकैस्तदेकदेशस्यानुमानस्याध्ययन क्रियते । अनुमानेऽपि हेत्वाभास पञ्चके व्याप्तिनिरूपणे पक्षताज्ञाने वा स्वीयमायुर्नाश्यते न चाधीयन्ते तैर्वास्तविकानि शास्त्राणि, यैर्हि स्यात्तेषा वस्तुतो ज्ञानवृद्धि । तथा हि सन्ति सस्कृतसाहित्ये निरूपिता बह्वो विद्या यासा नामापि नेदानीं श्रूयन्ते । तद्यथा—छान्दोग्ये सनत्कुमार प्रति आत्मजिज्ञासया गतो नारद स्वाधीता विद्या परिगणितवान्— "ऋग्वेद भगवोऽध्येमि यजुर्वेद, सामवेद, आथर्वण चतुर्थं, इतिहासपुराणं पञ्चम वेदाना वेद, पित्र्य राशिं, दैव, निधिं, वाकोवाक्य, एकायन, देवविद्या, ब्रह्मविद्या, भूतविद्या, क्षत्रविद्या, नक्षत्रविद्या, सर्पदेवयजनविद्याम्" इति । एव याज्ञवल्क्येनापि— पुराणन्यायमीमासाधर्मशास्त्राङ्गमिश्रिता । वेदा स्थानानि विद्याना धर्मस्य च चतुर्दश ॥ इत्येवरूपेण विद्याना चतुर्दशत्वमुक्तम् विष्णुपुराणे तु ताभिश्चतुर्दशविद्याभि सह "आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रय । अर्थशास्त्र चतुर्थं च विद्या ह्यष्टादशैव ता । इति तासा अष्टादशत्व प्रतिपादितम् । एवमन्या अपि अश्वगजायुधादिविद्या निदानादिविद्या रहस्यग्रन्थाश्च पूर्वं शास्त्रेषु उल्लिखिता । ये इदानीं नोपलभ्यन्ते न च ज्ञायन्ते आधुनिकैर्विद्वद्भिर्नाममात्रेणापि । तदेवासीत् सस्कृतभाषाया वास्तविक साहित्य यदादायैव "यदिहास्ति तदन्यत्र यन्नेहास्ति न तद् क्वचित् ।" "एतद्देशप्रसूतस्य सकाशादग्रजन्मन । स्व स्व चरित्रं शिक्षेरन् पृथिव्या सर्वमानवा ,"इति साटोपमुक्तिर्भारतीयानाम् । एषा खलु दशा इदानी शिक्षाया अन्तरङ्गाणाम् ।

व्रतब्रह्मचर्यशौचाचारादिवहिरङ्गशिक्षा तु नेदानीं क्वचित् दरीदृश्यते। पाश्चात्त्य-शिक्षाप्रभावतः सा तथोन्मूलिता यथा तामुज्जीवयितुं न कोऽपि चेष्टते इदानीम्।

अतः साम्प्रतिकी शिक्षाप्रणाली अन्तरङ्गबहिरङ्गोभयशिक्षाङ्गशून्या नाना दोषदूषिता विषवद् दूरतः परिहार्या। एषा प्रणाली तु पाश्चात्यैः भारतीयानां पङ्गुत्वः सम्पादनार्थमेव प्रचालिता। न चात्र केवलं दोषः पाश्चात्यानाम्, किन्तु विशेषतो मध्यकालिकविपश्चितामपि यैर्व्यर्थमेव येन केनाप्युपायेन विशेषतश्च वितण्डया परमुखमुद्रणाय स्वविजयेच्छुभिर्निरर्थका विषयज्ञानविरहिताः केवलं वादपराः नव्यन्यायव्याकरणादिविषयाणां ग्रन्था विरचिताः, आविष्कृता च सर्वेषामपि विषयाणां प्रतिपादनाय वादपूर्णा नव्यन्यायगुम्फिता सा निरूपणशैली। नव्यन्यायो नव्यव्याकरणं, एतच्छैली-लिखिताः साहित्यज्यौतिषादयो विषया ग्रन्थाश्च तदानीमेव लब्धजन्मानः। वादप्रधाने तस्मिन् युगे सर्वमपि प्राचीनं संस्कृतसाहित्यं सर्वथा विलुप्ताध्ययनाध्यापनं सत्कथाशेषतामुपगतम्। इदानीं बहूनां विषयाणां नैकेषां ग्रन्थानाञ्च नामापि नावशिष्यते। क्वेदानीं रहस्यग्रन्थाः क्व निदानशकुनादिविद्या-ग्रन्थाः। क्व वा विचित्रकलानिरूपणपरा निबन्धाः। क्व वाकोवाक्यम्, क्व वा वेदस्य ताः पारेसहस्रं शाखाः; येषामुल्लेखो बहोः कालादनन्तरमपि "पातञ्जले महाभाष्ये उपलभ्यते। एषां विनाशे कारणं केवलं न विदेशीयशासनमेव, अपितु प्रधानं कारणमस्मिन्वादयुगे तेषामध्ययनाध्यपनप्रचाराभावः। सुस्पष्टमेतत् सर्वेषा-मितिहासविदां यत् भारतीयं साहित्यं केवलमध्ययनाध्यापनपरम्परयैवैतावत्काल-मक्षुण्णं वर्तते। ये ये विषयाः ग्रन्थाश्चअध्ययनाध्यापनपरम्परातो बहिर्भूतास्ते प्रायशः लुप्ताः। ये च प्रकाशनहेतोर्न प्रणष्टास्तेऽपीदानीं प्रणाशोन्मुखा एव, अध्ययनाध्यापन-बहिर्भूतत्वात्। तेषां रहस्यं तु इदानीमपि लुप्तप्रायमेव। संख्येया एव संख्यावन्तः-सन्ति संस्कृतज्ञेषु, ये सन्ति पुराणानां अन्येषां चार्थशास्त्रादिविषयाणां वास्तविक-रहस्यविदः। अतः वास्तविकशिक्षाधिगत्यर्थं प्राचीनविलुप्तसंस्कृतसाहित्यसंरक्षणार्थञ्च सामयिककतिपयसंशोधनसहिता सा प्राक्तनी आर्षी पद्धतिरेवोपयुक्तेति ब्रूमः।

यथा पुरोपनयनसंस्कारानन्तरं ब्रह्मचारिण ऋषीणामाश्रमेषु प्रेष्यन्ते स्म। ऋषीणां महाकारा लताकुञ्जफलपुष्पादिसमन्विताः परितः प्राकृतिकरमणीयता—विलसिताः शुद्धजलाशययुता आश्रमा एव तेषां विद्यालयाः। साधारणानि कृत्रिमशोभा-

निरहितानि इष्टजान्येव तेषां गृहाणि आचार्य एव तेषां पितरावभिभावकश्च, सहचारिणो ब्रह्मचारिणो वन्या मृगा एव च तेषां सहचराः, परितः नानाविध-रमणीयदृश्यावृता प्रकामं विस्तृता प्रकृतिरेव च तेषां रङ्गस्थली, उपदेष्ट्री चापि। शिक्षाग्रहणं, गुरुशुश्रूषा प्रकृतिशोभानिरीक्षणं, नैत्यिककर्मसम्पादनमेव च तेषां दैनन्दिनं कर्तव्यम्। न तेषां ग्रन्थाध्ययनकाल एवाध्ययनम्, किन्तु प्रतिक्षणं ते प्रकृतितः आचार्यतः, तद्व्यवहारतः सहचरेभ्यश्च शिक्षा लभन्त एव। इदानीमपि तादृशेषु एकान्तेषु स्थानेषु नगरतोऽतिदूरेषु सर्वविधलौकिकचाकचक्यविरहिता साधारणा सात्त्विका आश्रमा निर्मेयाः। तेषु च भारतीयसाधारणवेषभूषाभूषिताः सदाचारपरा तत्तद्विषयेषु परिनिष्ठिता वानप्रस्था विशिष्टा गृहस्था वा अध्यापका नियोज्याः। एवमाचार्योऽपि वानप्रस्थोऽनेकविषयेषु पारदृश्वा कश्चित् विपश्चित् सदाचारे लोकव्यवहारे च दीक्षित एव नियोज्यः। तत्र च सर्वैः प्राक् त एव शौचाचारादयः अन्ये च विद्याध्ययनोपयोगिनो ब्रह्मचर्यगुरुसेवादयो नियमाः शिक्षणीयाः। येन स्याच्छरीरशुद्धिरन्तःशुद्धिश्च तेषाम्। सम्भवेयुश्च ते सात्त्विकविचारवन्तोऽन्तेवसन्तः, भवेच्चोदयः स्मृतिधारणामेधोहापोहादीनां विद्याग्रहणोप-योगिनां तत्त्वानाम्। गुरुशुश्रूषया, गुरुंप्रति आत्मसमर्पणेन गुरूपसत्त्याचभवेदेव विनयप्राप्तिः, या हि शिक्षायाः प्रधानं प्रयोजनम्। अत एव शिष्या विनेया इति व्यपदिश्यन्ते। तेषां महर्षीणां आचार्याणां सर्वोऽप्याचारव्यवहारश्च भवति शिक्षारूपः। उक्तं च केनापि कविना—

> परिचरितव्याः सन्तो, यद्यपि ददति नो सदुपदेशम्।
> यास्तेषां स्वैरकथा भवन्ति ता एव सदुपदेशाः॥ इति

स्मृत्यादिविषयाणामाचारव्यवहारादीनां च शिक्षा व्रतादिपालनद्वारा रात्रिन्दिवमनु-ष्ठीयमानाचार्यव्यवहारेण च स्वत एव सम्पन्ना स्यात्।

एवं सत्या शिक्षाबहिरङ्गसाधनसम्पत्तौ, याऽन्तरङ्ग—शिक्षा तत्तद्विषयाणां तत्प्रतिपादकानां ग्रन्थानां वा शिक्षा सापि न ग्रन्थाध्यापनद्वारा सम्पाद्या, अपितु तत्तद्विषयाध्यापनद्वारा। ग्रन्थद्वारा दीयमानायां शिक्षायां कतिचिद्ग्रन्थाध्ययने एव समाप्तिमेति भूयान् कालो न चैकस्यापि विषयस्य सम्यग्ज्ञानं सम्पद्यते। विषया-ध्यापने तु सारल्येन तत्तद्विषयसिद्धान्तानां तदीयमार्मिकरहस्यानाञ्च शिक्षायाः स्वल्पे एव काले सम्भवात् परीक्षासु पाठ्यक्रमे च विषया एव सन्निवेश्याः। यथा भूगोलेतिहास-

राजनीतिज्यौतिषदर्शनधर्मशास्त्रवार्ताशास्त्रादयः। विषयज्ञानार्थं तत्प्रतिपादकग्रन्थानामुपयोगो विधेयः। परीक्षास्वपि तत्तद्विषयविषयिण एव प्रश्नाः प्रष्टव्या न तु ग्रन्थविषयकाः। अद्यत्वे तु न नव्यव्याकरणादिविषयाः परीक्षायां निर्धारिताः, किन्तु केचिद् ग्रन्थविशेषा एव। यदि ते ग्रन्थविशेषा विषयप्रतिपादकाः स्युस्तदा नास्ति काऽपि हानिः। किन्तु ते ग्रन्था विषयनिरूपणविरहिताः केवलं वादपराः। यथा व्याकरणे भट्टोजिदीक्षितनागेशप्रभृतीनां ग्रन्थाः। न्याये च गदाधरजगदीशप्रभृतीनां ग्रन्थाः। न शब्देन्दुशेखरमनोरमादीनामध्ययनेन शब्दसाधुत्वज्ञानरूपं व्याकरणप्रयोजनं, न वा व्याप्तिपञ्चलक्षणसामान्यनिरुक्त्यवच्छेदकत्वनिरुक्तिकेवलान्वय्यादीनामध्ययनेन पदार्थज्ञानरूपं कथानियमनिरूपणपरं वा न्यायशास्त्रप्रयोजनं सिद्ध्यति। पाठ्यक्रमे परीक्षासु च तत्तद्विषया निर्धार्याः केवलं तत्तद्विषयप्रतिपादका ग्रन्थाः सहायतार्थं निर्धार्याः। यदि न सन्ति तत्तद्विषयमात्रप्रतिपादकाः सरला ग्रन्थास्तर्हि ते नूतना निर्मेयाः। सन्ति हीदानीं ध्वंसावशेषेऽपि संस्कृतसाहित्ये ते समेऽपि विषयाः समासतो व्यासतो वा तत्र तत्र प्रतिपादिताः। यत उद्धृत्य तत्तद्विषयकाभिनवग्रन्थनिर्माणाय पर्याप्ता सामग्री उपलब्धुं सुशका।

भौगोलिकी ऐतिहासिकी च सामग्री पुराणेषु, भागवते, वेदे, अन्यत्र च रामायणमहाभारतादिषु पर्याप्तमुपलभ्यते। एवं राजनीतिवार्तादीन्यपि शास्त्राणि विस्तरत उपलभ्यन्त एवेति नाभावः कस्यापि विषयस्य। एषा सामग्री पर्याप्ताऽभिनवग्रन्थरचनायै। किञ्च ये तत्तद्विषयका अभिनवा आधुनिका विचारास्तेऽपि संस्कृतसाहित्ये अनुवाद्याः। तथा ज्यौतिषे, आयुर्वेदे, पदार्थविद्यायां, विज्ञाने, वार्तायां च समयानुसारं नवीनानामाविष्काराणां समावेशो विधेयः, तत्प्रायोगिकज्ञानाय च विधेयो नूतनाविष्कृतानां यन्त्राणामुपयोगः। एवं चेत् प्रयत्येत मन्ये पुनरपि स्यात् स्वल्प उद्धारः संस्कृताध्येतॄणामन्यथा तु महती विनष्टिरेव। इति शम्।